दीप्तिमुक्त्वा करायेति सहस्रादित्यतेजसे ।
हृदन्तः प्रणवादिः स्यात् किरीटादिमनुस्त्वयम् ॥ २४

कृत्वा स्थण्डिलमस्मिन्निःक्षिप्य निजासिकां समुपविश्य ।
पीठादिकं निजाङ्गे प्रपूज्य गन्धादिभिः सुशुद्धमनाः ॥ २५

सद्वादशाक्षरान्तं प्रपूज्य विधिवत् किरीटमन्त्रेण ।
कुर्यात् पुष्पाञ्जलिमपि निजदेहे पञ्चशोऽथवा त्रिशः ॥ २६

इति दीक्षितविहितविधिः संप्रोक्तोऽष्टाक्षरस्य मन्त्रस्य ।
शुद्धानां विमलधियां दीक्षा प्रतिवक्ष्यतेऽत्र संक्षेपात् ॥ २७

कृत्वा त्रिगुणिताद्दीनामेकं मण्डलमुज्ज्वलम् ।
आत्मार्चनोक्तविधिना शक्तिभिः पीठमर्चयेत् ॥ २८

विमलोत्कर्षणी ज्ञाना क्रिया योगेति शक्तयः ।
प्रह्वी सत्या तथेशानाऽनुग्रहा नवमी स्मृता ॥ २९

निधाय कलशं तत्र पञ्चगव्येन पूरयेत् ।
पयोभिर्वा गवां प्रोक्तैः क्वाथैर्वा साष्टगन्धकैः ॥ ३०

अष्टाक्षराङ्गैरष्टार्णयुगैरष्टाक्षरान्वितैः ।
दलमूले यजेद्भूयो वासुदेवादिकान् क्रमात् ।
सशक्तिकास्ततो बाह्ये सम्पूज्या हरिहेतयः ॥ ३१

चक्रशङ्खगदाम्बुजकौस्तुभमुसलाः सखड्गवनमालाः ।
रक्ताच्छपीतकनकश्यामलकृष्णाद्युशुक्लभासः स्युः ॥ ३२

ध्वजश्च वैनतेयश्च शङ्खपद्मौ दिशो गताः ।
विघ्नार्यकौ तथा दुर्गा विष्वक्सेनो विदिग्गताः ॥ ३३

ध्वजः श्यामो विपो रक्तो निधी शुक्लारुणप्रभौ ।
अरुणश्यामलश्यामपीता विघ्नादयो मताः ॥ ३४

सूचितः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

सुशुद्धमना इति । गन्धादीनां चित्पर्यन्तं व्याप्तिचिन्तनमुक्तम् ।

विधिवदिति । पुष्पाञ्जलेर्जलगन्धसंपुटत्वम् ॥ २५ ॥ २६ ॥ २७ ॥

अष्टाक्षराङ्गैरिति । पञ्चाङ्गैः प्रथमावरणमुक्तम् । अष्टार्णवर्णैरित्यक्षराष्टकेन द्वितीयम् । पञ्चावरणमित्यङ्गैः विनेत्यवगन्तव्यम् ॥ २८—४१ ॥

इन्द्रादयस्तद्बहिश्च पूज्याः पूर्वादिभिः क्रमात् ।
इति विष्णोर्विधानन्तु पञ्चावरणमुच्यते ॥ ३५

एवमभ्यर्चिते विष्णावुपचारैस्तु पूर्ववत् ।
अग्निमाधाय कुण्डे तु ब्रह्मयागसमीरितैः ॥ ३६

जुहुयादष्टभिर्द्रव्यैर्मनुनाऽष्टाक्षरेण तु ।
पृथगष्टशतावृत्त्या हुत्वा दत्त्वा बलिं ततः ॥ ३७

अभिषिच्य गुरुः शिष्यं प्रवदेत् पूर्ववन्मनुम् ।
द्वात्रिंशल्लक्षमानेन स तु मन्त्रं जपेत्ततः ।
तदर्धसंख्यकं वापि शुद्धाचारो जितेन्द्रियः ॥ ३८

पद्मासनः प्राग्वदनोऽप्रलापी तन्मानसस्तर्जनिवर्जिताभिः ।
अक्षस्रजा वाङ्गुलिभिर्जपेत्तं नातिद्रुतं नातिविलम्बितञ्च ॥ ३९

प्रागीरितैरथ जुहोतु दशांशकं वा द्रव्यैः शुभैः सरसिजैर्मधुराप्लुतैर्वा ।
रत्नांशुकप्रवरकाञ्चनगोमहीभिर्धान्यैर्यथाविभवतः प्रयजेद्गुरुञ्च ॥ ४०

विप्रान् प्रतर्प्य विभवैरथ मन्त्रजापी
संश्रावयेज्जपविधिञ्च ततः क्रमेण ।
नित्यार्चना च विहिता विधिनाऽमुनैव
प्रोक्तक्रमेण विदधात्वथ चात्मपूजाम् ॥ ४१

इति जपहुतार्चनाद्यैर्मन्त्री योऽष्टाक्षरं समभ्यस्येत् ।
स त्वैहिकीञ्च सिद्धिं संप्राप्याऽन्ते प्रयाति परमं पदम् ॥ ४२

अङ्गानि पूर्वं त्वथ मूर्तिशक्तीः सकेशवादींश्च पुरन्दरादीन् ।
समर्चयेद्यस्तु विधानमेतन्नरोऽचिरात् काङ्क्षितमेति कामम् ॥ ४३

यष्टव्याः स्युर्वासुदेवादिरादौ चक्राद्याः कीत्यादिकाः केशवाद्याः ।
इन्द्राद्याश्चेत्येवमेव प्रदिष्टं पुष्ट्यायुःश्रीकीर्त्तिसिद्ध्यै विधानम् ॥ ४४

सवासुदेवादिकमर्चयित्वा भूयो ध्वजादींश्च पुरन्दरादीन् ।
क्रमेण विद्वान् विधिनाऽर्चयीतेत्यर्थं क्रमश्च त्रिदशाभिपूज्यः ॥ ४५

अर्चनाद्यैर्मन्त्रीति। ऐहिकसिद्धौ तद्योग्यबीजयोगादिकमुक्तम् ॥ ४२ ॥
॥ ४३ ॥ ४४ ॥

इत्युक्तविधिचतुष्के पूजयितुरथैकमपि यथाशक्ति ।
अचिरेण भवति लक्ष्मीर्हस्तगता सकलवर्गसिद्धिकरी ॥ ४६
अष्टाक्षराक्षराष्टकमूर्तिविधानानि भेदभिन्नानि ।
वक्ष्याम्यर्चयितॄणां वाञ्छितसकलार्थसिद्धिदानि सदा ॥ ४७
सिन्दूरकुन्दकरविन्दकबन्धुजीव-
काश्मीरपद्ममकरन्दरुचः क्रमेण ।
नीलोत्पलाम्बुरुहरागसमानरूपाः
स्युर्मूर्तयोऽष्ट कथिता मनुवर्णजाताः ॥ ४८
अरिदरगदाब्जहस्ताः सर्वास्तु नकारमोऽर्णयोर्मूर्ती ।
शङ्खारिगदाब्जकरे लक्षणमन्यत् समानरूपं स्यात् ॥ ४९
या मूर्तिरर्च्यतेऽस्य व्रजन्ति परिवारतां तदवशिष्टाः ।
अविशिष्टेऽन्तेऽप्यंशे स्वयञ्च परिवारतां प्रयाति तदा ॥ ५०
इयमेवावृतिरधिका प्रणवजे प्रणवजात् पुरा समुद्दिष्टात् ।
भवति विधानादिति पुनरेषां प्रथमविधानमुद्दिष्टम् ॥ ५१
अथ द्वितीयाक्षरजेऽङ्गतोऽन्ते वर्णाष्टमूर्तीरपि मूर्तिशक्तीः ।
यजेद्विधाने च सकेतुलोकपालादिकानन्यदथ प्रवक्ष्ये ॥ ५२
मोकारजे रतिधृती च सकान्तितुष्टि-
पुष्टिस्मृतीरपि च दीप्त्यभिधाञ्च कीर्त्तिम् ।

क्रमेण विद्यानित्यङ्गावरणयोग उक्तः ॥ ४५ ॥ ४६ ॥

भेदभिन्नानीत्यावरणभेदभिन्नानीत्यर्थः ॥ ४७ ॥

अम्बुरुहरागवर्णाः सर्वविधानेष्ववशिष्टान्त्या मूर्तिरिति ज्ञेया ॥ ४८ ॥

अरिदरगदाब्जहस्ताः सर्वा इति । दक्षिणोर्ध्वहस्तमारभ्य प्रादक्षिण्येनेत्यर्थः । इयमेवाक्षरमूर्त्यावृतिः प्रणवजे विधानेऽधिका भवति । तस्मात् पुरा प्रणवपटले उक्तात् प्रणवविधानादित्यर्थः । अङ्गवासुदेवाद्यात्मादीन्द्रवज्रादिभिर्हि प्रणवविधानमुद्दिष्टम् । अत्र तु क्रुद्धोल्कादिभिरङ्गपूजा तदनन्तरमक्षरमूर्तिपूजा ततो वासुदेवादिकमिति । नकारादिविधानेषु ओं नं ओं नमो नारायणाय इत्यादयो मन्त्रा ज्ञातव्याः । सर्वत्र चाङ्गानन्तरं मूर्त्यावृतिद्वयं द्रष्टव्यम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

केत्वादिकञ्च सशतक्रतुपूर्वकञ्च
सम्पूजयेद्विमलधीः पुनरङ्गतोऽन्ते ॥ ५३
नाकारजेऽङ्गतोऽन्ते प्रपूजयेन्मूर्तिशक्तिलोकेशान् ।
रावर्णजे तु मूर्तीः श्रीभूमायामनोन्मथनीश्च यजेत ॥ ५४
क्षौः श्री रतिः सपुष्टिर्मोहनिमाये महादियोगाद्ये ।
माये च तृतीयावृतिरन्यदशेषं पुरैव निर्दिष्टम् ॥ ५५
यकारजेऽरिशङ्खौ च सगदाहलशार्ङ्गकाः ।
मुसलः खड्गशूलौ च तृतीया पाञ्चरोद्भवे ॥ ५६
शेषो वासुकितक्षककर्कोटकपङ्कजमहापद्माः ।
दरपालकुलिकाख्यौ तृतीयमन्यत् समं विधानेऽन्त्ये ॥ ५७
अङ्गैः प्रथमावरणं मूर्तिभिरपि शक्तिभिर्द्वितीयमपि ।
अन्ये केशवकेत्वादिभ्यां स्यात् पञ्चमञ्च मत्स्याद्यैः ॥ ५८
मत्स्यः कूर्मवराहौ नृसिंहकुब्जत्रिरामकृष्णाश्च ।
कल्किः सानन्तात्मा पुनरमृतात्मा च षष्ठमहिपाद्यैः ॥ ५९
सप्तममपि लोकेशैरष्टममपि तदायुधैश्च संप्रोक्तम् ।
प्रागुक्तेषु विधानेष्वालक्ष्यं नोक्तमत्र यत्तदपि ॥ ६०
अष्टाक्षराक्षरविधानचतुष्कयुग्मं
प्रोक्तक्रमेण विधिनाऽभियजेद् य एनम् ।
भक्त्या मुकुन्दमनुजापरतो नराग्र्यः
प्राप्नोति वाञ्छितमयत्नत एव कामम् ॥ ६१

इति श्रीप्रपञ्चसारे विंशः पटलः ।

विमलधीरिति । मूर्त्यावरणमन्त्रभेदाः मूर्त्यावरणे तत्तदक्षरानन्तरमारभ्य पूजाक्रमश्च सूचितः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

आलक्ष्यमिति । किरीटमन्त्रपुष्पाञ्जल्यादिक्रमेष्वपि विधानेषु द्रष्टव्यमित्यर्थः ॥ ६० ॥ ६१ ॥

इति श्रीपद्मपादाचार्यकृते प्रपञ्चसारविवरणे
विंशतिः पटलः ।